te I 467 has *divi sad* udirata (yadudirati I 474, which has *dha nam* in place of *dhana* of RV) di dhosman 'atihyau refers to (a) I 223, which contains *susuvamsam* and (b) II 1017, which has susu mna

280 (a) In the comm *trih* means, that the word parisvanah occurs thrice in SV Cf I 475, II 443, 663 But add parisvanasah of I 485 Similarly *dvih* means that adhi sanah' occurs only twice Cf I 529, 532, in 601, 529 is repeated The reading 'adhatvadiriti seems better, because in these situations *s* is not that of a dhatu, but of a word, which is not derived from a dhatu Note the extreme brevity, which is the chief characteristic of our commentator

(b) The phenomenon of changing *s* into s has been treated in details by RPr Here is a comparison of the same with our treatise —

s=s after a upastut RV 9 87 9 (RPr V 30) not found in SV and not noted by Panini, Benfey notes antariksasat but cf Bohtlink on P III 2 61 After a vrthasat I 63 4, only once in the RV but wanting in SV turasat II 304 only once in SV but fourtimes in RV noted by the comm with prasat, prtanasat satrusat on CA II 82 prtanasat II 781 thrice in SV, but fivetimes in RV not divided in the *pada text* of either prtanasahyaya 3 37 1 noted by RPr V 23, VPr III 75, and Panini VIII 3 109

s=*s* after i RPr notes examples of 'sah vi *sa* RV 9 97 38=vi *sa* II 706, uti *sah* 6 2 4, but uti sah in SV I 365 hi *sah* I 381, vi *su* II 1057 and the like are covered by 282

RPr V —

4 provides for *sat* and *sthah* divisad 9 61 10, but cf divi sad in SV II 22 and divi san in I 83 (RV has *san*) 'yu vam hi sthah svarpati' is a counter example and occure in SV II 351, 423 having svah pati RPr V 4 is covered by 280

6 provides for gobhissyama etc, which are not found in SV

7 notes *sma* hisma RV 1 37 15 = hisma SV II 319 SV II 1078 has prati *smi*, but I 24 reads prati sma, where RV has s, SV I 230 has api smasi where RV reads *s* Such cases are covered by 282 Cf VPr III 68

8 examples do not occur in SV

9 examples are wanting in SV

10 esu syah 9 3 10=syah II 61 SV II 588 has pari sva but RV reads pari *sya*

11 Panini VIII 4 41 – 286

12 provides satva for 16 padas tamu staváma 8 95 6 – II 234, anustunuvanti 8 38 – II 922 (VPr III 72), apo histha 10 9 1 – II 1190, (cf TPr VI 2 which converts s into *s* after 12 words) rajati *stup*

9 96 18-II 524, parı stobha ntu 8 92 19-II 72, II 413 All aıe covered by 281, 282

13 parı siñcata II 580, 63ɔ, 679, 742, 796, 1026, parı svajanta I 375, parı svajamahe II 1155 Cf VPr III 64, TPr VI 4, and Panını VIII 3 65

14 nı sedathuh RV 4 56 7-' II 946, nı sıda II 27 Cf VPr III 59, and Panını VIII 3 66

15 parı sasvaje II 548 Cf Panını VIII 3 64, and CA II 90

16 hı stha II 1191, but hı stha II 3ɔ1, 423 RV 9 19 2

17 trısadhasthe II 259, cf CA II 98, which covers all cases that are not otherwise provided and Panını VIII 3 106, ıbhı şata I 309-7 32 24 For purvınestham, see note on I adhısnubhıh I 615

18 u sva nah II 347-u suvanah RV 9 107 8 Cf VPr III 62, TPr VI 2, the scope of which is very vide, CA II 97 and Bohtlınk on III 2 106 dıvı sañchukra 6 2 6, but dıvı sañchukra I 83 vamsu śıdatı II 1116-1 57 3 Note also susaha, susuta susumat, susu mna etc, which are covered by 281

19 20 examples are not found ın SV

21 camusacchyenah 9 96 19-II 525 mrñjantyrsısana 9 86 4-II 236

22 rathestham 6 21 1-II 774 prtanasahyaya has been noted Cf paramesthah on Panını VIII 3 97, VPr III 56, and CA II 94

23 records exceptions Cf TPr VI 8 parı srava I 567, II 249 325, 331, 412, 534, 558, 662

24 susamıddho no RV I 13 1 (VPr III 82 records 24 exceptions) but SV II 695 reads susamıddha, dıvısprśah II 753, abhısvare Ṙ 281 = RV 8 97 12

27 gosakhayam 5 37 4, gosakhā II 1187, but gosakha ın RV 8 14 1=1 122

28 For sutesute see note on I carsanısaham 8 21 10=II 709 Cf VPr III 84

29 abhı satva 10 103 ɔ=II 1206 Cf VPr III 8, TPr VI 12 For anusık, cf note on I

30 puru santyoh 9 58 3=II 409 susamıdha ? 17 1, sus amıddhah II 695

To the phenomenon of ce rebralısatıon Panını devotes 53 sutras Cf VII 3 57—109

281 Cf RPr V 18, 19 VPr III 61-63, and TPr VI 2 See also 'śuñah' CA II 97 which is quite identı cal with Panını VIII 3 107 and is according to Whitney somewhat defective See Whitney, CA II 97

282 In the comm 'jagate pado' may be corrected to 'jagate pade'

283 RPr IV 41, and Panını, VIII 3 41

284 RPr V 31-38, VPr III 74-79, and Panını VIII 3 101, 104 sustu tah, is the reading adopted by Bur But 'svasustamah' SV I 451 seems correct, because ın

*sustutah* *s* is not *sandhya* In *sustutah* the s is changed into *s* by 272 See Panini VIII 3 105 In 'tvamagne grhapatistvam hota' SV I 61 patih is not in the middle of the pada, but at the end of it, hence cerebralisation does not take place Cf Bhattoji on Panini VIII 3 103, and the commentary here 'pādamadhyasye tyadhikarah,' (brought down from 282) SV II 237 has *prabhoste*, but RV in the same passage has prabhoste

285 Correct 511 to 551, which reads 'dhanuṣtanvanti paumsyam' In suvīrabhistarati vājakarmabhih,' 'surirabhih' is not followed by a *pada* containing *p*

286 Cf RPr V II, VPr III 80, TPr VII 13, 14, CA II 16, and Panini VIII 4 41

287 This sutra has nothing to do with this treatise It stands at the beginning of Samatantra, a treatise of Samaveda, which treats sāman form of the rc and is invariably appended to RT In fact both the treatises are supplementary to each other, and the one is not complete without the other We know nothing for certain about the author or authors of either Tradition attributes RT to Śakatayana, and Sāmatantra to Audavraji

Nor can we say anything about the author of the commentary on RT as to who he was or when and where he lived The quotations from gathas (see 38) and the quotation from Nakulamukha, which could have given some clue about his date, are, inspite of my best efforts, yet untraced A portion of a copious commentary on this gloss was secured from Adyar Library and is given in the following pages But as it is incomplete and does not comment either on the beginning or the end of our treatise, it is of no practical value to settle anything about the authorship either of RT or of the commentary thereon Further research is required for settling this question and I feel confident to continue my quest, till it bears the desired fruit

The statement of B, that RT contains 280 sutras, seems to be due to miscalculation, as I have carefully compared A, B, C and Bur for this, and found the same number of sutras in all of them

# ॥ ऋक्तन्त्रविवृतिः ॥

**श्रीमते सामवेदाय नमः । श्रीमते हयग्रीवाय नमः ।**

**अथ गायत्रगानप्रकारो निरूप्यते ।** यथासावित्री गेय यत्रागीतमिति[1] **देवताध्यायब्राह्मणेन यत्र गायत्र न गीत यत्र यत्र वा गायत्र गेय तत्र तत्र यथा सावित्री तत्सवितुर्वरेण्यमित्यस्या येन प्रकारेण गीयते गायत्र तत्सावित्रीगानप्रकारमनतिक्रम्य गेयम् । सावित्र्या गायत्रगानवदेव गेयमित्यतिदेशात् सर्वत्र गायत्रमात्रे योनिवद् गानमेव कर्तव्य नार्चिकवदुच्चनीचमिति प्राप्तम् । गायत्रगान च प्रकृतिविकृतिसाधारण्येन देवताध्यायाध्ययनसिद्धमेव । गानञ्चार्षेयब्राह्मणे दर्शितम् । तद्यथा**[2] 'गायत्र पौष्कलमाग्नेय प्रथमाया वा यथादिष्ट गेय प्रथमस्वरैर्वा चतुरक्षरवृद्धान्तैरायपात् प्रस्ताव ओंकारान्तो हिम् मा[3] वेत्यन्तस्तोभो वृद्धो भवति इमे वै लोका गायत्रम् **इति** महाब्राह्मणे **सप्तमाध्यायस्य प्रथमखण्डे** त्र्यावृद् गेय[4]**मित्युक्तम् । अस्यार्थ । त्र्यावृदिति क्रियाविशेषणम् । आवृन्नाम गीतिखण्ड । तिस्र आवृतो यस्मिन् तत् त्र्यावृत् तद्यथा भवति तथा गेयमिति । तस्य व्याख्यानमेतत् । प्रथमाया वा यथादिष्ट गेयमित्यादि सर्वत्र वाशब्द एवकारार्थे ।** प्रस्तावप्रतिहारनिधनानामक्षरपरिमाण यथायोनि चिकीर्षेद्वैच्छन्दसेष्विति[5] **वचनेन यथादिष्ट विच्छ-**

1 Cp Dbr III 23, 24, Agnisvamin on LSS VII 10 18 The avyayibhava compound requires short i

2 The quotation is not found in A br and Concordance For the practice of quoting from memory cp M Muller, Preface to I vol of the 1st ed of RV p XXVI

3 The Ms has हि ममा वे०

4 "इमे वै लोका गायत्र त्र्यावृद् गेय त्रयो हीमे लोका यत् त्र्यावृद् गायतीति एभिरेवैन लोकै समिमीते" PVB 7 1 1 Cp Sayana on it —

'आवृदिति गानक्रियाविशेषणम् । आवृतो गीतिखण्डा तिस्र आवृतो यस्मिन् तत्त्र्यावृत्तद्यथा भवति तथा गेयम् ।"

5 प्रस्ताव वैच्छन्देसष्वनादेशे Dr XX 4, LSS VII 9 6 The printed text has षि०

न्द् स्वादिष्ट विहित गायत्र यथा सावित्री भवति तथा गेयमिति नौकार-योरावृतोरक्षरावापः । उक्तगेयभक्तित्वेऽपि यथासावित्र्येवाक्षरपरिमाण-मिति । तथा च सूत्र गायत्रपटले ज्यायसि च्छन्दसि प्रथमायामावृत्त्या वपेदुत्तम पाद शिष्ट्वाष्टाक्षरामिति धानजय्य[1] इति । कथ गानमित्यत आह प्रथमस्वरैर्वेति । प्रथमस्वरैर्वा सर्वैरक्षरै प्रथमा ऋग् गेयेति । तत्र सर्वेषामक्षराणा प्रथमस्वरेऽवस्थानप्राप्तौ पूर्वावावर्गाववनर्द्याविति धानजय्य[2] इति सूत्रेण अन्त्यस्याक्षरस्यै नीचैरवस्थापनरूपावनर्दन क्रियते । प्रेङ्खणरूपेण योनिवद्गान प्रेङ्खणम् । अथ द्वितीयामावृतमाह चतुरक्षरवृद्धान्तैरिति । अत्रापि काकाक्षिन्यायेनावनर्ददिति[3] ब्राह्मणमिति धानजय्याशय । अथ गौतममन्तमपि ब्राह्मणभाष्यकार एव व्याच ख्यौ । तद्यथा मध्यमायामावृति द्वौ स्तोभौ कुर्यात्तावनर्द्याविति गौतम[4] इति । अस्यार्थः । मध्यमे गीतभागे तदन्त्यस्वरसदृशस्वरावनियतावनर्दनीयाविति[5] । तावेव गानेन दर्शयति अभिदेवॉ इया आ आँ[6] इति । तत्र द्वावाकारावन्त्याक्षरसदृशौ प्रत्येकमवनर्दिताविप्यर्थ । तथा च न नित्यावनर्दनप्रथमद्वितीयगीतिखण्डान्त्याक्षर-द्वयावनर्दनविषय द्विरवनर्ददिति[7] ब्राह्मणम्, किन्तु आगन्तुकस्तोभद्वयावनर्दनाभि-प्रायमिति गौतमाशय । इदमप्यवनर्दनद्वययोनावधीतमेव । तथा च सर्वत्र ओंकारावित्येके स्तोभानैकान्त्याच्चेति[8] सूत्रे नित्यासंस्वरविशिष्टान्त्याक्षरसदृशस्वरान्त रद्वय स्तौभिकमोंकारद्वयमेवेति केचित् पक्षमुक्त्वा ऋगक्षरसदृशावेवेत्या चार्यमतमुक्तम् । तथा च मध्यमगीतिखण्डस्याय स्वरनिष्कर्ष । प्रथमा क्षरस्य द्वितीयस्वरारम्भोऽर्थात् प्राप्त । चतुरक्षरवृद्धान्तै प्रथमस्वरैरित्ययेन प्रथमाक्षरव्यतिरिक्तानामन्त्यस्य च प्रथमस्वरावस्थान प्रथमस्वरैर्वेति सबध्यते । तदयमर्थ । चतुरक्षराणि[10] च वृद्धान्तश्च चतुरक्षरवृद्धान्तास्तैश्चतुरक्षरवृद्धान्तैः । वृद्धाश्च त अन्ताश्च वृद्धान्ता । चतुरक्षराणि च प्रथमस्वरैरेव वृद्धान्तसहित

1(a) ज्यायसि च्छन्दसि प्रथमायामावृत्त्या वपेदुत्तम पद शिष्ट्वा Dr XXI 2 8, LŚS VII 11 1 The Ms has पादम्
(b) अष्टाक्षरमिति धानजय्य Dr XXI 2 9 LŚS VII 11 2

2 पूर्वावावर्गाववनर्द्याविति धानजय्य Dr XXI 2 2, LŚS VII 10 22 (आवृती एव आवर्गे)

3 PVB 7 1 2

4 ०त्तावनर्द्यावि० LŚS VII 10 23

5 The MS has स्वरानियता०

6 अभिदेवा ५ इया ३३३३ इति LŚS VII 10 24 Dr XXI 2 4 has इया १२१२

7 PVB 7 1 2

8 Dr XXI 2 5-7, wanting in LŚS

9 So the MS I suspect नित्यमस्वर०

10 Wanting in the MS

चतुरक्षरैर्गेयमिति वृद्धभूतचरमाक्षरेण सह तदव्यवहितैश्चतुर्भिरक्षरै. प्रथम स्वरै पञ्चभिरक्षरैरिति यावत्। तथा च मध्यमायामावृत्ति षडक्षराणा प्रथम-स्वरगाने प्राप्ते तत्र प्रथमाक्षरस्य नीचारभः पुनः चतुर्णामक्षराणामन्त्यस्य च षष्ठस्य प्रथमस्वरत्वमुक्त भवति। तत्र पूर्वावावर्गावववनर्दाविति धानजय्य[1] इति उच्चै. स्थितस्य नीचैरवस्थापनरूपमवनर्दनम्। अन्त्यस्य वृद्धस्य। तथा च ब्राह्मण भाष्यकारेण व्याख्यातम्[2]। पूर्वावावर्गावववनर्दाविति धानजय्य इति। अस्यायमर्थ। पूर्वौ गीतिखण्डौ अवनर्दनीयौ। अवह्नीनेदित्यर्थ। पूर्वयोर्गीतिखण्डयो. अन्त्याक्षरयोरवस्वरण नित्यमित्युक्त भवति। एतदपेक्षया द्विरवनतप्रथम स्वरावस्थितस्य षष्ठस्य च वृद्धस्य द्वितीयस्वरेऽवस्थानरूपावनर्दन तत चरमस्वरसदृशस्वरद्वयस्य प्रत्येक द्वितीय (य्य) स्वरावस्थितस्य उच्चै कृत्वा नीचैरवस्थापनमिति। अथ व्याद्वृद् गेयमिति[3] अस्य प्रतिहारभक्ते पूर्वत्वशङ्कां व्यावर्तयति। आद्यपात् प्रस्ताव ओंकारान्त इति स्पष्टम्। तथा च प्रस्ताव भागस्य न व्यावृत् शब्दार्थान्तर्गतत्वमिति भाव। तदिद गायत्रस्य पदेन प्रस्ताव सर्वत्रेत्यस्य[4] सूत्रस्य मूलम्। सर्वत्राक्षरेणेति धानजय्य[5] तथा पुराण ताण्डमित्यस्य[6] तत्सवितुर्वरेण्यमिति देवताध्यायगविकर्षप्रस्तावो मूलमिति। अथ द्विरवनर्देद्धिंकुर्यात्तृतीयमिति[7] ब्राह्मणे तृतीयावनर्दनरूपो हिंकारो विहित। स च हिंकारमात्रो न भवति किन्त्वाकारसहित एवेति दर्शयति। मा एवेत्य-न्वस्तोभो वृद्धो वेति। हिम्मा इत्यन्तम् मध्ये स्तोभ उद्गीथोपद्रवयोर्मध्ये। स च वृद्ध एव। तस्याप्यवनर्दनरूपत्वेन नीचैरवस्थापन प्रेंखणरूपेण क्रियते। मध्यमपदपर्यायान्त शब्देन सापेक्षेणोद्गीथभक्ते पर प्रतिहार। तत परमुपद्रवभक्तिरिति सामर्थ्यात् सूचितम्। तथा च हिम्मा इति प्रतिहार।

1 LŚS 7 10 22 Dr XXI 2 2

2 Cp Sayana —

अवनर्दनस्वरूप सूत्रकारो बहुधा विकल्पितवान्। तद्यथा (यद्य॰ a misprint) पूर्वावावर्गावववनर्दाविति धानजय्य (printed text corrupt) इति। अस्यायमर्थ। आवर्गौ इति। खण्डौ व्यवनर्दौ अवनर्दनीयौ अवस्वरेदित्यर्थ। पूर्वखण्डयोरन्त्याक्षरमुच्चै कृत्वा नीचैरवस्थापयेदित्यर्थ। Note the great difference between this and the quotation

3 Cp the quotation in the beginning

4 गायत्रस्य पदेन प्रस्ताव सर्वत्र LŚS VII 10 15, cp Dr XXI 1 (last portion)

5 अष्टाक्षरेणेति धानञ्जय्य LŚS VII 10 16

6 LŚS VII 10 17

7 PVB VII 1 2

ह्वातो इत्युपद्रव । उपद्रव एव त्र्यावृद्गेयमिति गीतिखण्डत्रित्वसङ्ख्यापूरक इत्युक्त भवति । अन्ते स्तोमो वृद्धो वेति पृथगपि छेदस्तेनान्त उपद्रवान्त, समावसाने स्तोभ, कार्य निधनत्वेन । स च क इत्यत आह वेति । वाकार इति । वा पक्षान्तरम् । वा आ इति वा वर्णच्छेद । तथा च आकार एव वा निधनमिति । तथा चैतदभिप्रायेणैव सूत्रवचनानि । यथा पावमानायेन्दवा इत्येकावृत् अभिदेवाँ इयेत्य परा ह्वाता इत्यपरेति[1] । ऊर्ध्वं रेतस्याया द्व्यक्षर शिष्ट्वा हिंकार ब्रूयाद्धिम्माईत रेतस्यायै[3]मित्यादि ह्वातो आ[4] ह्वातो वा[5] इत्यादीत्यनुसधेयाह्नि ।

अथोदात्तानुदात्तसन्धेरुदात्तत्व विधातुमाद्यार्धमात्रोदात्त एव स्वरित इति विधातु च प्रथममुदात्तस्योत्सञ्ज्ञामाह –

॥ ५१ ॥ उदात्तमुत्[6] ॥ १ ॥

अथोदात्तानुदात्तसन्धेरुदात्तमाह –

॥ ५२ ॥ वान्त्संधिः ॥ २ ॥

इति । उदित्यनुवर्तते । विवृणोति । उदात्तवान् सन्धिरुत्सञ्ज्ञो भवतीति । उदाहरति । आ इन्द्र सानसिम् । एन्द्र सानसिम् । आ इन्द्र याहि । एन्द्र याहि । आ इत उ न्विन्द्रम् । एतो न्विन्द्रम् । उत् घ इत् अभि । उद् घेदभि । अत्र अह गो अमन्वत । अत्राह गोरमन्वत । आद्योदाहरणत्रये आकारेकारसन्धेरे शब्दस्योदात्तत्वम् । उद्घेदित्यत्र घस्यानुदात्तस्य इच्छब्दस्योदात्तस्य सन्धे घेच्छब्दस्योदात्तत्वम् । अथोदात्तवानित्यस्य व्यावर्त्यमाह । उदात्तवानिति । उपो नु । केयथेति । उप उ नु । क ईयथ । स्वरितानुदात्तसन्धित्वात् पो शब्दस्य के शब्दस्य च नोदात्तवानुत्सन्धि ।

अथाद्यार्धमात्राया एवोदात्तत्व स्वरितत्व चाह —

॥ ५३ ॥ आद्यार्धमात्रा स्वरितम् ॥ ३ ॥

इति । तस्य वृत्ति । आद्यार्धमात्रोत्सञ्ज्ञा भवति । तत्स्वरित नामेति । वर्णस्यार्धमात्र उत्सञ्ज्ञा भवति । उदित्यनुवर्तते । उदात्तमुदिति विधानात् । आद्यार्ध

1 LSS 7 10 21 Dr XXI 2 1

2 ऊर्ध्वं रेतस्याया द्व्यक्षर शिष्ट्वा हिंकार ब्रूयाद्धु ३ आ ३ ३ इति LSS 7 11 3 Dr XXI 2 10

3 त रेतस्याया प्रतिहर्ता मनसा ध्यायेन्न परा स्विति गौतम LSS 7 11 4, Dr XXI 2 11

4 अवस्वरेदिति धानजय्य ह्वा ३ तो आ ३ ३१११ LSS 7 11 12 Dr XXI 2 (last portion)

5 ह्वातो वा इति गौतम 7 11 13 ह्वातो आ इत्यके 7 11 14

6 Cp RT 51-61

मात्रा उदात्ता भवतीत्यर्थ । उदात्ताद्यार्धमात्रा स्वरितमिति वचनादाद्यार्धमात्रो-
दात्ताश एव स्वरित नाम । नामशब्दस्य प्रसिद्धार्थत्वात् । यत् स्वरित (स्वरित)
मिति प्रसिद्ध तदुदात्त एव स्वरितमिति व्यवह्रियते । न ह्युदात्तानुदात्त
प्रचयस्वरत्रयव्यतिरेकेण स्वरित नाम स्वरान्तरमस्ति । अवशिष्टार्धमात्रानु
दात्त प्रचयस्थाभत्वात् स्वरप्रचय इत्यर्थ । तदुक्त नारदशिक्षायाम् —

अत ऊर्ध्व प्रवक्ष्यामि ह्यार्चिक तु स्वरत्रयम् ।
उदात्तश्चानुदात्तश्च तृतीय प्रचयस्वर [1] ॥

इति । अत ऊर्ध्व प्रवक्ष्यामि ह्यार्चिक तु स्वरत्रयमिति प्रतिज्ञाय तृतीय
प्रचयस्वर इत्युपसहारात् स्वरित नाम स्वरान्तरमुदात्तानुदात्तप्रचयव्यतिरेकेण
नास्तीत्यर्थः स्फुट एव । तर्हि स्वरितव्यवहार स्वरान्तरत्वाभावे निरालबन
स्यादित्यत आह —

य एवोदात्त इत्युक्त स एव स्वरित स्वर [2] ॥

इति । अवशिष्टाशस्तु स्वरप्रचय इत्यत आह —

प्रचय प्रोच्यते तज्ज्ञैर्न चात्र स्वरितान्तरम् [3] ॥

इति । उदात्ताद्यार्धमात्रा स्वरितमिति उदात्त एव स्वरित इति वि
धानात् अर्थादवशिष्टाशस्वर प्रचय इति तज्ज्ञै स्वरितस्वरूपज्ञैरुदात्त एव
स्वरिताशिष्टाश स्वरितोत्तरप्रचयत्वात् स्वरप्रचय इति व्यवह्रियते । यथा
एक एव वर्ण ऋत्विक् स्वरप्रचय इति च व्यवह्रियते । न चात्र ऋचि स्वरितान्तर
स्वरत्रयव्यतिरिक्त व्यवह्रियते तज्ज्ञैरिति ।

य एवोदात्त इत्युक्त स एव स्वरित स्वर ।
प्रचय प्रोच्यते तज्ज्ञैर्न चात्र स्वरितान्तरम् ॥

इति वचनस्यार्थ । अत्र तज्ज्ञैरित्यनेन ये स्वरितमिति स्वरान्तरमस्ति
तेन साक स्वरचतुष्टयमृक्ष्वप्यस्तीति वदन्तीति ते तदज्ञा इति स्वरितस्वरू
पाज्ञा इति वचनमेव तान्निन्दति । तर्ह्येकस्यैव वर्णस्योच्चनीचात्मकत्व कथ
मित्यत आह —

उच्चैर्वर्णस्वरो नीच स्वरतो द्विधा स्मृत [4] ॥

1 NŚ 1 has प्रवक्ष्याम्यार्चिकस्य and तृतीय स्वरितस्वर । Cp SS p 422

2 NŚ runs य एवोदात्त इत्युक्त स एव स्वरितात् पर ॥ Cp SS p 422

3 NS has प्रचय प्रोच्यते तज्ज्ञैर्न चात्रान्यत् स्वरान्तरम् । Cp SS p 422

4 Not found in NŚ

इति । मात्रिको वर्ण एवैक आद्यार्धेनोच्च इतरार्धेन नीच इति । स्वरत. उच्चनीचस्वरभेदत । द्विविध स्मृत इति । ऋक्तन्त्रकारादिभि स्मृत इत्यर्थ । यदि च स्वरित नाम स्वरान्तरमस्ति तदा उच्चनीचप्रचयानामिव स्वरितप्रद र्शनस्थानान्तरमपि स्यात् । यथा तैत्तिरीयाणा चातुस्वर्यात् स्थानचतुष्टयम्:-

द्वितीयाद्यास्तु मन्द्रान्तास्तैत्तिरीयाश्चतुर स्वरान्[1] ॥

इति वचनात् । नह्यस्माक स्थानचतुष्टये स्वरप्रदर्शनमस्ति । उच्चनी चापेक्षया स्वरितान्तराभावे तस्य स्थानाभावे च वचनान्तरम् । यथा —

उच्चादुच्चतर नास्ति नीचान्नीचतर तथा ।
वैस्वर्ये स्वारसञ्ज्ञाया किं स्थान स्वार उच्यते[2] ॥

इति । उच्चादुच्चतर स्वरितमित्युच्यते वा नीचान्नीचतर वा तदुभया भावात् । तस्माद्वैस्वर्ये स्वारसञ्ज्ञा । विस्वरत्वेनोच्चारणमेव स्वार[3] इति नाम्ना वदन्ति । वैस्वर्य चोच्चनीचाशयोर्मध्ये स्फुरणादुभयसाधारण न स्वरान्तर येन स्थानमपि तस्य स्यात् । तदुक्तम् —

उच्चनीचेऽथ मन्मध्ये स्वर साधारण स्मृत[4] ॥

इति । अत एव न स्वार स्वारसञ्ज्ञाया प्रतिजानाति शैक्षिक शौक्षिको ऽपीत्यर्थ[5] । ऋकतन्त्रकारतद्व्याख्यातृभि स्वरितस्योच्चनीचव्यतिरेकेण स्वर सञ्ज्ञाकरणाभावात् स्वरितस्य स्थानान्तरसत्त्वे द्व्यन्तरत्वमप्यार्चिकस्य स्वरस्य स्यात् । तथात्वे -

एकान्तरस्वरो ह्यृक्षु गाथासु द्व्यन्तर स्वर ।
सामसु त्र्यन्तर विद्यादेतावत् स्वरतोऽन्तरम्[6] ॥

इति वचनविरोध स्यात् । गाथासु यजुःषु चातुस्वर्येण स्थानचतुष्ट यस्य विद्यमानत्वाद् द्व्यन्तरम् । अस्माक स्थानत्रयत्वेन त्रिकस्वर एकान्तर एव । तस्मादाद्यार्धमात्रोदात्त एव स्वरित । न स्वरित नाम स्वरान्तरमस्तीति ।

**आद्यार्धमात्रा स्वरितम् ॥ ३ ॥**

1 Cp NŚ 11 ŚS 1 397 The Ms has
द्वितीयाद्यास्तु मन्त्रान्तास्तैतिरीयांश्चतु स्वरान्॥

2 NŚ 6 ŚS 423 The ms has —
वैस्वर्ये स्वरसञ्ज्ञाया किं स्थानस्वर उच्यते ॥

3 The Ms has स्वर instead of स्वार

4 NŚ 7 runs उच्चनीचस्य यन्मध्ये साधा रणमिति श्रुति ।
त स्वार स्वारसञ्ज्ञाया प्रतिजानन्ति शौक्षका ॥
ŚS p 423

5 The MS has शौक्षिकशिक्षिको॰

6 NŚ 3 ŚS p 395 The Ms एकान्तर स्वरोऽनृक्षु

अथाद्यार्धमात्राया उच्चीभावस्थलमाहः—

॥ ५४ ॥ उच्चीचेमे ॥ ४ ॥

इति । विवृणोति । उच्चीभवति तत् स्वरित नीचे वा प्रत्यये विरामे वेति । आद्यार्धमात्रा स्वरितरितामित्यनुवर्तते । उच्चीभवति आद्यार्धमात्रेत्यर्था दनुवृत्ति. । तत् स्वरितमित्यनुवाद । उत्तरत्र स्वर्यत इति व्यवहारोऽपि आद्या धमात्रा स्वरित विद्यादिति सूचनाय । तच्च स्वरित नीचे वा प्रत्यये विरामे वार्धर्चान्ते ऋगन्ते च भवतीत्यर्थ । उदाहरति । नि होता सत्सि बर्हिषि । स उच्चत्वेऽभावेऽपि स्वरितशब्देनेव व्यवहाराय । खाया इन्द्रमूतये ( १ ४००) । अभि त्वा शूर नोनुमोऽदुग्धा (१ २३३ ) । इन्द्र तुभ्यमिदद्रिवोऽनुत्त वज्रिन् वीर्यम् ( १ ४१२ ) । यादिन्द्र चित्र म इह न ( १ ३४५ ) एवमादिषु । नीचे वा प्रत्यये विरामे वा । आद्यार्धमात्रा नीचविरामयो पूर्वस्य वर्णस्योच्ची- भवति । तत्स्वरितमित्यर्थ ॥ उच्चीचेमे ॥ ४ ॥

ननु नीचे वा प्रत्यये विरामे वा स्वरित भवति चेत् अग्न आ याही (१ १)- त्यादावाकारादेरुदात्तस्यापि नीचपरत्वात् स्वरितस्योदात्तमेव, पवित्रे च म्वोस्सुत ( १ ५।६ ) इत्यादौ विरामपरत्वात् त शब्दादेरपि स्वरितत्व स्या- दित्यत आह —

॥ ५५ ॥ नीचमुच्चात् ॥ ५ ॥

इति । विवृणोति । नीचमुच्चात्पर स्वर्यत इति । उदाहरति आ याहि (१ १) । वार वन्तम् (१ १७) । स्वादिष्ठया (१ ४६८ ) । अग्ने स्तोमम् (२ ७५३) । पान्तम् (१ १७५) । इन्दो (१ ५०५) । आ याहि (१ १६१) प्रभृतीनि । अग्ने युक्ष्वा (१ २५)। अग्न मृड (१ २३) । सोम सोमपते पिब (१ ४०२) । एन्द्र याहि (१ ३४८) । अपा नपातम् (१ ६२) । (इन्द्रा) येन्दो (१ ४७२) । (रु) चाभि गा ईहि (१ ५०५) । आ याहि सुषुमो हि त इन्द्र (१ १६१) । अग्न आ याहि ( २ ६०१ ) इत्येव प्रभृतीनि उदाहरणानि । तत्र संहिताया नीचमुच्चात् पर स्वर्यते । ननु तर्ह्युदात्तात् परस्य नीचस्य स्वरितत्वे अग्न आ याहि (२ ६१) इत्यादौ उदात्तात् परस्य नीचस्य मेरित्यादेरुदात्तात् परस्यापि संहिताया स्वरितापत्तिरित्यत पूर्वसूत्रानुषङ्ग माह नीचे वा प्रत्यये विरामे वेति । तथा च नीचे वा प्रत्यये विरामे वा नीचमुच्चादिति पूर्वसूत्राशशेषानुवृत्त्या एकवाक्यत्वेन नोक्तदोष इत्यर्थ । अग्ने आ याहीत्यादौ

शब्दादेर्नीचपरकत्वान्न स्वरितापत्तिः । अकारस्य नीचपरत्वेऽप्युदात्तपरत्वाभावान्न स्वरितः । अथ नीचे वा प्रत्यये विरामे वेत्यनुवृत्ते स्वयमेव व्यावर्त्यमाह नीचे वा प्रत्यये विरामे वेति । ०रि चम्वो (१ ५१३) रिति । जनो न पुरि चम्वोः (१ ५१३) इत्यत्र च शब्दस्य रि शब्दादुच्चात् परत्वेऽपि नीचप्रत्ययकत्वाभावात् स्वरितप्रत्ययकत्वेन न स्वरितः । विरामपरकत्वाभावात् च । उच्चनीचे, नीचमुच्चादिति पृथक्सूत्रकरणेन अनुवृत्त्या समुच्चयपराकरणेन च एकोदात्तानेकोदात्तपरयोः स्वरितयोः सूत्रसमुच्चयो लक्षणम् । तदन्यस्य स्वरितस्यान्यतरदेव लक्षणमिति सूचनाय । तद्यथा सखायो दीर्घजिह्वयम् (१ ५४५) (पु) रि चम्वो (१ ५१३) । पवित्रे चम्वो सुत (१ ४६०) इत्यादि स्वरितेषु नीचे वा प्रत्यये विरामे वेति लक्षणम् । अतिप्रसङ्गपरिहारस्तु शास्त्रान्तरेण नीचस्य नीचत्वमुदात्तस्योदात्तत्वमिति व्यवस्थया द्रष्टव्यः ॥ नीचमुच्चादिति ॥५॥

अथोच्चात् सयोगात् परस्य नीचस्य उदात्तानुदात्तसन्धित्वादुदात्तप्राप्तौ स्वरितमाह —

## ॥ ५६ ॥ संयोगात् ॥ ६ ॥

इति । उच्चादिति पूर्वसूत्रा (५) दनुवर्तते । विवृणोति । सयोगात् परः स्वर्यत इति । उदात्तात् सयोगात् परः स्वर्यत इत्यर्थः । पूर्वमसयुक्तोदात्तानुदात्तसंधेरुदात्तत्वमुक्तमत्र सयोगात् परस्यानुदात्तस्य स्वरितत्वं प्रतिपाद्यते । उदात्तानुदात्तसन्धित्वेऽपि सयोगपरत्वाद्विशेषः । उदाहरति । श्रुष्टि अग्ने श्रुष्ट्यग्ने (१ १०६) । श्रुष्टीति षकारटकारसयोगात् उदात्तात् परस्यानुदात्तस्य अकारस्य स्वरित इत्यर्थः । अभि एति—अभ्येति (१ ५२४) । एकारः स्वर्यते । स्वसार जारो अभ्येति पश्चात् (२ ८६७) । अभि अर्चाम—अभ्यर्चाम (१ ५३५) । अकारः स्वर्यते । प्र गायताभ्यर्चाम (१ ५३५) । योजा नु इन्द्र—योजा न्विन्द्र १ ४१५) । इकारः स्वर्यते । पाहि उत—पाह्यू ३ त (१ ३६) । उकारः स्वर्यते । मा न इन्द्र अभि आदिश —मा न इन्द्राभ्या दिश (१ १२८) । आकारः स्वर्यते । पिबा त्वाऽऽस्य गिर्वण – ( पिब तु अस्य )—पिबा त्वा ३ स्य गिर्वण (२ ७४१) । आकारः स्वर्यते । शग्धि उ सु शचीपते—शग्ध्यू षू शचीपते (१ २५३) । उकारः स्वर्यते । उच्चादित्यस्य (५) व्यावर्त्यमाह । यदि वहन्ति

आशव.—यदी वहन्त्याशव (१ ३५६)। आश इत्यत्र आकारस्य नीचत्वेऽपि सयोगात् परत्वेऽपि न स्वरित उच्चात्परत्वाभावात् सयोगस्य नीचत्वात् । अथ नीचमित्यस्य व्यावर्त्यमाह। अपात् उ शिप्री अन्धस —अपादु शिप्र्य न्धस (१ १४५)। प्रीशब्दादुच्चात् सयोगात् परत्वेऽपि अकारस्य नीचत्वा भावान्न स्वरित । अथ सयोगा (६) दित्यस्य व्यावर्त्यमाह । सयोगात् यावाहु सयुजाविति (१ ३६१) । आहुरिति उच्चात् परत्वेऽपि नीचत्वेऽपि आकारस्य सयोगात् परत्वाभावान्न स्वरित. । न च नीचमुच्चादति (५) सूत्रेण स्वरित• स्यादिति वाच्यम् । हुशब्दस्योच्चत्वेन नीचे वा प्रत्यये विरामे वेति लक्षणाभावात् ॥ सयोगात् ॥ ६ ॥

अथ स्वरितानुदात्तसन्धेरुदात्तानुदात्तसन्धेश्च स्वरितमाह -

॥ ५७ ॥ क्वेयहीन्द्रनीवेति ॥ ७ ॥

विवृणोति। क्व इयथ—क्वे यथ (१ २७१) । अथ हि इन्द्र—अथा हीन्द्र (१ ४०६)। नि इव शीर्षाणि मृद्वम् - नीव शीर्षाणि मृद्वम् (२ १००४)। उदात्तानुदात्तसन्धेर्वान्त्सन्धि (२) रिति उदात्तप्राप्तौ हीन्द्र नीवे त्यनयोरुदात्ता नुदात्तसन्धित्वेऽपि स्वरिता भवति ग्रहणादिति विशेष ॥ क्वे यहीन्द्रनीवेति ॥७॥

अथ ०तोऽरुण (१ २११), वृधेऽ स्मान् (१ २३६), तेऽमन्वत (आ स २१) इत्येतेषूदात्तानुदात्तसन्धित्वेन स्वरित उदात्तो वेति सशयवारणायाह -

॥ ५८ ॥ तोर्धेस्ते[1] ॥ ८ ॥

इति । वान्त्सधिरित्यनेन उदात्तप्रतिपादनात् । कुत सशय । आचार्याणा विप्रतिपत्तेरिति ब्रूम । विवृणोति। स त अरुणप्सु —दूरादिहेव यत्सतोऽरुणप्सु (१ २११)। वृधे अस्मान् —वृधे ३ ऽस्मान् (१ २३६)। ते अमन्वत— तेऽमन्वत (आ स २१) इति । एतेषु शब्देषु तोस्तशब्दात् धे धकारात् तेस्तकारात् परोऽनुदात्तोऽकार उदात्तमापद्यते । अस्माक पाठ स्वरित ॥ तोर्धेस्तेम् ॥

॥ ५९ ॥ नैगिनोभयथा ॥ ९ ॥

व्याचष्टे। उपयथा नैगिना प्रोक्तम्। तोऽर्धेस्त इत्यधिकार । उदात्त स्वरित वा इति। तोऽरुण, वृधे ३ ऽस्मान्, तेऽमन्वतेत्येतेषु उदात्त वा भवति स्वरितो वेत्युभयथा नैगिनाचार्येण प्रोक्तमित्यर्थ ॥ नैगिनोभयथा ॥ ९ ॥

1 Cp RT तोर्धेस्तेम् 58

॥ ६० ॥ न्यायेनौदव्रजिः ॥ १० ॥

न्याचष्टे । न्यायेनौदव्रजिराचार्यो मन्यते । उच्चानुच्चसन्धिरुच्च एव कार्य इति न्याय । वान्तसन्धिरिति प्रतिपादनाच्च । तेन तोऽरुणेत्यादौ उदात्त एवेत्यौ दव्रजिराचार्यो मन्यत इत्यर्थ ॥ न्यायेनौदव्राजि ॥ १० ॥

॥ ऋक्तन्त्रविवृतौ प्रथम प्रपाठक ॥

# (ऋक्तन्त्रे द्वितीयः प्रपाठकः)

## (प्रथमो दशक.)

अथ स्वरितात् पराणा प्रचयाना समानश्रुतित्वमाह —

॥ ६१ ॥ तस्मादुच्चश्रुतिः ॥ १ ॥

इति । विवृणोति । तस्मात् स्वरितात् पराणि उदात्तश्रुतीनि भवन्ति । उदाहरति । हव्यदातये ( १ १) । अभि त्वा शूर (१ २२३) प्रभृतीनि । आजाता सुक्रतो पृण (१ ५२) । इन्दु रिन्द्राय धीयते (१ ४८६) । सुता विदथे अक्रमु (१ ४७७) । नीचे वा प्रत्यये विरामे वेतीति । हव्यदातये, आजाता सुक्रतो पृणेत्यादौ विरामपरत्वात् यावद्विराममुदात्तश्रुति । अभि त्वा शूर प्रभृतीनीति प्रभृति गौणात् यावन्नीचमुदात्तश्रुतिरित्यर्थ । अथ नीचे वा प्रत्यये विरामे वेति पवित्रे चम्वो सुत. (१ ४६०) सखायो दीर्घजिह्वयम् (१ ५४५) इति पवित्रे इति त्रे शब्दात् स्वरितात् परश्च शब्दो नीच एव । स्वरितनीचयोर्मध्ये प्रचयानामेवै कश्रुति । सुत इत्यत्र विरामपरत्वेऽपि उदात्तत्वेन प्रचयत्वाभावात् स्वरितपर प्रचयानामेकस्य द्वयोर्वा बहूना वा विरामे नीचे वा प्रत्यये एकश्रुति । अत एव सखायो दीर्घ जिह्वयम् इत्यत्र जिशब्दपर्यन्तमेकश्रुति अन्त्यस्य व्यश ह्वस्य विरामपरत्वेऽपि स्वरितत्वेन स्वरितपरत्वाभावात् सोदात्तता इत्यर्थ ॥ तस्मादुच्चश्रुतीनि ॥

शिक्षा चेय तस्मादुच्चश्रुतीनीति सूत्रसवादिनी विजयते उदात्तानुदात्तस्वरितसहिताया स्वरितादनुदात्तानामेकश्रुतिरिति । यदि स्वरितानुदात्तानामेकश्रुति स्यात्तदा तस्मादुच्चश्रुतिनीति सूत्रविरोध स्यात् तद्व्याख्यानविरोधश्च स्यात् । स्वरितमात्रार्धमात्रोदात्त शिष्ट प्रचय

इति स्वरितस्य स्वरनिर्णयाच्च । नहि स्वरितप्रचयानामैकश्रुत्य मनसापि सभावयितु शक्यम् । तस्मादुक्ततन्त्रतद्वृत्तिशिक्षाशास्त्रान्तरादिभिस्सहिताया मृचि स्वरत्रयस्यैव प्रतिपादनात् स्वरितस्य चोच्चनीचान्तर्भावप्रतिपादनाच्च तदेकवाक्यतया पारिभाषिकवचनस्याप्यर्थो वक्तव्य । एव हि पारिभाषिक वचनम् —

दीर्घस्थाने तु स्वरित मात्रास्थाने तु धारय ।
पर्वस्थाने उदात्त स्यात् प्रकृतौ छललक्षणम् ॥
मात्रास्थाने तु स्वरित दीर्घस्थाने तु धारय ।
पर्वस्थान उदात्त स्यादुत्तराच्छललक्षणम् ॥

इति सकेतवचनमपि अनेकोदात्तानुदात्तपरम् । तत्पर एव च —

स्वरित स्वारसज्ञ स्याद्दीर्घस्थाने पृथग् ऋचि ।
तृतीयस्वरितोदात्तो ऽनेको नेकयश्च यत्र हि ॥
दीर्घस्तु शिष्यकोदात्त पर्वस्थाने प्रकृत्यृचि ।
एकस्वरस्थनानार्णा अर्धर्चान्त्या न चेत्तदा ॥
तद्द्वितीयादिधारी स्यात् मात्रास्थाने प्रकृत्यृचि ।
स्वारधार्योश्च दीर्घत्व मात्रात्वे व्यत्ययेन तु ॥
ʼउत्तरायामृचि ज्ञेयो पर्वैव चिबुको भवेत् ॥
प्रथमादिद्वितीयान्त पद स्वारवदिष्यते ॥
पदकाले स दीर्घ स्यादभ्यास पर्वसज्ञक ।
मात्रा पदाना मात्राणामिष्यन्ते सामशाखिनाम् ॥
उदात्तस्वरितद्वयाचि प्रचयो निहत स्वर ।
तत्र तु स्वरितात् पूर्व उदात्त॰ प्रथम स्वर ॥
स्वरितोऽन्य उदात्तश्च प्रचयश्च द्वितीयग ।
द्वितीयस्वर कपोऽनुदात्तस्तु त्रितीयग ॥
स्वरित कपते तत्र यत्रोदात्त परो भवेत् ।
एकोदात्तपर स्वार प्रचयश्चोच्चवद् भवेत् ॥
सर्वेऽवशिष्टा स्वरिता स्वर्यन्ते सामशाखिनाम् ।ʼ

इति । अनेकोदात्तात् पर नि होता इत्यादि । अनुदात्तात् परश्च स्वार॰ अ[3]या[1] व[2]र्धस्व त[3क]न्[र]वा[21] गि[3]रा[3उ] (१ ५२) इत्यादि । तत्पर अनेकोदात्ता

1 Not found in ŚS

नुदात्ताच्च य परो न भवति। एकोदात्तात्परव्यतिरिक्तः कपव्यतिरिक्तश्च स्वार. तत्परशब्देनोच्यते । के इत्यादि । एते त्रयोऽपि स्वारसञ्ज्ञा दीर्घस्थाने प्रकृत्यृचि। एतदेव स्वरत्रयमुत्तरासु मात्रास्थान एव त्रयाणां दीर्घत्वाय मात्रत्वाय च पारिभाषिकस्वरसञ्ज्ञाकरणम् । एकोदात्तात् परस्य स्वरितस्य स्वरितत्व यदि निवर्तयेत्तदा तस्य स्वरितत्वेनोच्चारण न स्यात्। नहि निवर्तयति। उदात्ताद्यार्धमात्रा स्वरितमित्यस्य सर्वस्वरितसाधारणत्वात्। अन्यथा कपस्यापि स्वरितत्व न स्यात् पारिभाषिकस्वरितान्तर्भावाभावेन स्वरितसञ्ज्ञाविरहात् । प्रत्युत एकोदात्तात् परस्य स्वरितस्य नीचमुच्चात् (५) इति सूत्रोदाहरणत्वे स्वादिष्ठया (१ ४६८), वारंवन्तम् (१ १७) इत्यादेरुदाहृतत्वाच्च स्वरितत्व नास्तीति वक्तु न शक्यम् न च। न वयमेकोदात्तात् परस्वरितस्य स्वरितत्व निवारयाम किन्तु तस्य च[1]

समश्रुतित्व ब्रूम इति वाच्यम्। किमिद समानश्रुतित्वमुभयो. समानस्थानत्वेनोच्यते ऽथ वचनाद्वा—

स्वरितो ऽन्य उदात्तश्च प्रचयश्च द्वितीयग ॥

इति वचनस्य स्वरितस्य स्थानान्तराभावेन द्वितीयस्वरत्वप्रतिपादनपरस्य कपव्यतिरिक्तसकलस्वरितसाधारणत्वेनानेकोदात्तात् परस्यापि प्रचयसमाना श्रुति स्यात्। न च वचनबलेन समानश्रुतित्वम् । एव हि वचनम्

एकोदात्तात् परस्वारप्रचयश्चोच्चवद् भवेत्।
सर्वे ऽवशिष्टा स्वरिता स्वर्यन्ते सामशाखिनाम् ॥

इति। अस्य चार्थ सूक्ष्मबुद्धिभि सम्यग् द्रष्टव्यः। एकोदात्तात् परस्वारप्रचयश्चेति न भिन्नपदत्व समस्तपदत्वनैवाकरेषु बहुषु दर्शनात् । भिन्नपदत्वे ऽपि न वैयधिकरण्य किन्तु सामानाधिकरण्यमेव। समस्तपदत्वे ऽपि न द्वन्द्व समास । यत एक एव वर्णं पूर्वार्धमात्रोदात्त स्वरित शिष्टाश प्रचय इति स्वरप्रचय इति प्रोच्यते स्वरितोदात्त इति च ।

य एवोदात्त इत्युक्त स एव स्वरितस्वर ।
प्रचय प्रोच्यते तज्ज्ञै र्न चात्र स्वरितान्तरम् ॥

इति समानाधिकरणवचनात्। स एव च स्वर प्रचयात्मक. ।

उदात्तस्वरितश्च प्रचया निहते स्वर. ।

1 The MS is broken

इति स्वरचतुष्टयगुण न पूरकम् । तस्मादुच्चश्रुतिरिति[1] स्वरितात् पराणि यावन्नीच यावद्विराम वा उदात्तश्रुतीनि भवन्तीति ऋक्तन्त्रतद्व्याख्या भ्यामुदात्तादनुदात्तस्य स्वरित[2] संहिताया स्वरितादनुदात्तानामेकश्रुतिरिति[3] वचनेन तु च उदात्ताद्यार्धमात्रा स्वरितमिति[4] स्वरितस्वरूपविधायके नवस्वरितस्य[5] च प्रचयाना च स्वरभेदविधानेन स्वरितप्रचयानामेकश्रुत्या सभवाच्च । तस्मादयमर्थ । कपानुदात्तपरातत्परस्वरितव्यतिरिक्तप्रचयो द्विविध । एकोदात्तात् परो ऽनेकोदात्तात् परश्चेति । तत्र एकोदात्तात् पर स्वरप्रचय उच्चवद् भवेत् । स्वरितत्वात् आद्यार्धमात्रोच्चवद् भवेत् । वच्छब्दग्रहणादीषन्न्यूनत्व स्वरित-स्वरात् प्रतीयते । अनेकोदात्तात्परस्त्वापाद्यार्धमात्रोच्च एव भवति । तदन्य एकोदात्तात्परस्वरितादन्यस्वरप्रचयश्चेत्याह —

सर्वे ऽवशिष्टा स्वरिता स्वर्यन्ते सामशाखिनाम् ॥

इति । न च स्वर्यन्ते उच्चवद् भवन्तीति शब्दद्वयस्यार्थभेद इति भ्रमित व्यम् । स्वर्यते आद्यार्धमात्रोच्चो भवतीत्यर्थ । उच्चवदाद्यार्धमात्रोच्चवदित्यर्थ । उभयो स्वरितत्वेनोच्चशब्दस्य सजातीयस्वरिताधमात्रोच्चसमानार्थकत्वात् । तथा च एकोदात्तात् पर स्वरित स्वरितपदवक्तव्य अनेकोदात्तात् परस्तु स्वरितत्वयैव वक्तव्य इति एकैकस्य

एकोदात्तात्परस्वारप्रचयश्चोच्चवद् भवेत् ।

सर्वेऽवशिष्टा स्वरिता स्वर्यन्ते सामशाखिनाम् ॥

इति . ऋक्तन्त्रकारादिवचनस्य सर्वेऽपि स्वरिता आद्यार्धमात्रा एवो दात्ता एव भवन्तीत्यर्थ एव विवेक ।

॥ ऋक्तन्त्र समाप्तम् ॥

॥ हरि॰ ओम् ॥

1 Cp RT 61

2 Cp Panini VIII 4 66

3 Cp Panini 1 2 39

4 Cp RT 53

5 So the MS May be विधायकेन च

# ॥ सामवेदसर्वानुक्रमणी ॥

## ॥ अथ सामवेदसर्वानुक्रमणिकाप्रारम्भः ॥

सप्त गानानि साम्नां वै ब्राह्मणा अष्ट वै स्मृताः ।
दश सूत्राणि सप्तापि दश लक्षणमिष्यते ॥
तत एषां स्वरूपन्तु कथ्यतेऽत्र समासतः ।
गायत्रं प्रथमं गानं आग्नेयन्तु द्वितीयकम् ॥
तृतीयं गानमैन्द्रं स्याच्चतुर्थं पावमानकम् ।
अर्कद्वन्द्वव्रतानीति छान्दसानीति पञ्चमम् ॥
ततः परं शुक्रीयं स्यान्महानाम्नी ततः परम् ।
एतानि सप्त गानानि प्रकृतेः कथितानि च ॥
तासामेव केचित्पक्षान्तरमाह ।
आग्नेयं प्रथमन्तु स्यादैन्द्रं स्यात्तु द्वितीयकम् ।
तृतीयं पावमानाख्यं चतुर्थं छान्दसं मतम् ॥
शुक्रीयं पञ्चमं प्रोक्तं षष्ठमूहाख्यमेव तु ।
सप्तमन्तु रहस्यं स्यादित्येतत्सामगानकम् ॥
अष्टौ हि ब्राह्मणा ग्रन्थाः प्रौढब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात्ततः सामविधानकम् ॥
आर्षेयन्तुरीयञ्च देवताध्यायञ्च पञ्चकम् ।

छान्दोग्यश्च षष्ठश्च संहितोपनिषत्तथा ॥
सप्तमब्राह्मणो वंशो ग्रंथा अष्टावुदीरिताः ।
द्राह्यायणमनुपदं निदानं कल्पमेव च ॥
उपग्रन्थाश्च क्षुद्राश्च तन्दालक्षणमेव च ।
सूत्रं पञ्चविधं ज्ञेयं कल्पानुपदमेव च ॥
अनुस्तोत्रन्तु विज्ञेया सूत्राणान्दशकं स्मृतम् ।

अथ सप्तदशलक्षणम् ।

गृह्य गायत्र ऋक्तन्त्रं सामतन्त्रश्च पुष्पकम् ।
ततोवग्रहं च हितवाक्य स्तोत्रानुसंहरम् ॥
मात्रार्चिकछलं चैव पाणिनीयश्च शैक्षकम् ।
नारदीयं गौतमीयं लोमशिक्षा ततः परम् ॥
अग्र आयानुदात्तश्च रावणीयन्ततः परम् ।
परिशिष्टे लक्षणेऽस्मिन् वनसंख्या प्रकीर्तिताः ॥
ऋक्दीपिका तथा ऋच्यध्यूढं सामाङ्कमेव च ।
ऋच्युद्धारस्तथा पद्यो परीऋचनिघातकम् ॥
छन्दोमय्युपनिदानन्तथा पैगलनागकम् ।
नैगाख्यं लघु ऋक्तन्त्रश्चन्द्रिकाख्यं स्वरस्य तु ॥
उदकः प्रतिस्तोत्रीयं विदुरेवं हि सूरिभिः ।
ऋग्लक्षणमिति प्रोक्तं राशिसंख्याविधानतः ॥
सूची चतुर्थी नित्यादि नमनं धारि लक्षणम् ।
हस्तलक्षणमित्येव प्रकृतेस्तु लघेस्तथा ॥
ऊहस्य तु लघूहस्य चैषां साम्नां प्रकाशिका ।
सामोपर्यङ्कसंज्ञश्च प्रकृत्यूह्यस्य लक्षणम् ॥
सकृतश्च तथैवानुस्वारवैकृतमेव च ।
स्वरभक्तिः कर्षणं प्रग्रथनत्रयमेवच ॥
सपत्य स्तोत्र्यतिहृतं स्तोभोद्धारकमेवच ।

वेयणामलक्षणं गीतिकल्पश्चैव ततः परम् ॥
चरणानां व्यूहमिति लक्षणं पारिभाषिकम् ।
छलाख्यं परिशिष्टर्षि देवानां क्रमकारिका ॥
पञ्चविंशति संख्याथ ब्राह्मणानाञ्च सूचिका ।
सूत्रलंक्षणसूचिभ्यामाहत्यांकवनं स्मृतम् ॥
सर्वानुक्रमणी नाम इद ग्रन्थस्य निर्मिता ।
श्रौतस्मार्तप्रयोगाणां ग्रन्थाख्या सम्यगीरिता ॥
ज्योतिष्टोमस्य यत्तन्त्र समारभ्य हि विश्वजित् ।
छन्दोगस्य प्रयोगस्य वृत्तिरेषा प्रदीपिका ॥
कृता त्रैविद्यवृद्धेन तालवृन्तनिवासिना ।
पुरुषोत्तमभट्टीयं प्रयोगस्येष एव तु ॥

अथातः पौर्णमासो हि आप्तकाम्यप्रयाणकः ।
पुनर्दहनमेतेषु चतुःपूर्वस्तु खादिरः ॥
पञ्चमं षष्ठकश्चैव गौतमीयन्ततोत्तरम् ।
गायत्रस्य विधानन्तु शुंगाचार्यकृतं वरम् ॥
खण्डास्तु तत्र विज्ञेया त्रय एव मनीषिणः ।
तेषामादिस्तु पद्यो हि बहिस्यात्तु द्वितीयकम् ॥
वसोर्मन्दा तृतीयं स्यात्समाप्त वेदमातृकम् ।
ऋचान्तन्तन्त्रव्याकरणे पञ्च संख्या प्रपाठकम् ॥
शाकटायनदेवेन द्वात्रिंशत् खण्डकास्मृता ।
तत्रादिमे प्रपाठके चत्वारः खण्डसम्मताः ॥
द्वितीये रस इत्युक्तस्तृतीये वसुसंज्ञकम् ।
चतुर्थे पञ्चमे चैव मुनिसंख्या समीरिताः ॥
वाचो वृत्तिश्च मासे तु तस्मादुच्चश्रुतीनि च ।
आविरादि तथा कर्ण सूत्रं जालालनं स्मृतम् ॥

त्रयस्त्रिंशच्च दशकं सूत्रञ्च वसुसंज्ञकम् ।
ऋक्तन्त्रञ्च समाप्तं स्याद्विज्ञेयं सामवित्तमैः ॥
सामतन्त्रं प्रवक्ष्यामि सुखार्थं सामवेदिनाम् ।
औदव्रजिकृतं सूक्ष्मं सामगानां सुखावहम् ॥
तत्र प्रपाठकाः प्रोक्तास्तिथिसंख्यामुनेर्मताः ।
खण्डाजमाया विज्ञेया छन्दोगाः कटपादयः ॥
प्रथमे च तुरीये च पष्ठके सप्तमे तथा ।
त्रयोदशप्रपाठके रुद्रसंख्या मुनेर्मताः ॥
द्वितीये च तृतीये च पञ्चमे दशमेऽपि च ।
अष्टमेकादशे विद्वन् दशसंख्यास्तु खण्डका' ॥
नवमे द्वादशे चैव नवका मुनिसम्मताः ।
चतुर्दशे प्रपाठके खण्डा आदित्यसंज्ञकाः ॥
खण्डास्त्रयोदश प्रोक्तास्तिथिसंख्याप्रपाठके ।
स्वरोनन्त्योऽथ प्रत्ताया हंहो उब्लि तथैव च ॥
तत्र मात्रमुणोधुश्च दिदुदीर्घान्त्य एव च ।
प्रदान्त्यङ्कि च अंसा च शौदात्ता अनृगाहिता ॥
दशकं तत्र संख्याभिर्विदुरेषाहमायनम् ।
सूत्रसंख्या तु गणयेन्नजनामायनं बुधाः ॥
सामतन्त्रमिदं प्रोक्तं समाप्तमगमं द्विजाः ।
भाष्यकारं भट्टपूर्वमुपाध्यायमहं सदा ॥
सूत्रकारं वररुचिं वन्दे पाणिञ्च वेधसम् ।
फुल्लसूत्रविधानेन खण्डप्रपाठकानि च ॥
तदादीनि यथा ज्ञात्वा वक्ष्ये प्रपाठदीपिकाम् ।
प्रपाठकानां दशसुखण्डाश्च धसका इति ॥
आदौ प्रपाठके तेषां सप्तविंशति खण्डका' ।
एकोनत्रिंशता ज्ञेया द्वितीये तु प्रपाठके ॥
तृतीये च तुरीये च अष्टविंशातिभिस्स्मृताः ।

रसबाणमुनीनान्तु द्वादश द्वादशेव तु ॥
वसोर्ग्रहस्य विज्ञेया दिकसंख्या मुनिभिस्मृता ।
दश प्रपाठके तत्र खण्डा एकादशैव हि ॥
आहत्य खण्डनवकसप्तत्यतिशतं बुधाः ।
प्रपाठकानामादिस्थसूत्राक्षरमहम्मुदा ॥
ब्रवीमि श्लोकरूपेण ज्ञात्यर्थमधुना बुधाः ।
उच्चपन्यश्च तालव्यं कक्षसौभरमेव च ॥
अःकारो वृततो देवे यकारे च विकल्पकः ।
नकारश्च दश प्रोक्ता विज्ञेयास्सूत्रपंक्तिभिः ॥
षोडशे तु प्रकरणे प्रत्येकं खण्डसंज्ञकम् ।
पूर्वसामवशेनैव गायमानन्ततोपरि ॥
सामोपरि तथा ज्ञेया तस्मादादिप्रकारणे ।
सामोपरि तथा खण्डाष्षट् पञ्चाशत् प्रकीर्तिताः ॥
आइभावमथैकस्यात् प्रकृतेः पञ्च पञ्चाशत् ।
वृद्धा वृद्धन्तु चत्वारः चत्वारश्चागतागता ॥
उच्चनीचं चतुर्थन्तु पदसंधौ चतुर्थकम् ।
अत्वमेकमथाभावे द्वावेव मुनिसम्मताः ॥
ततः प्रश्लेषविश्लेषतृतीयं परिकीर्तितम् ।
संकृष्टे च विकृष्टे च चतुष्टयमुदीरितम ॥
अथ व्यञ्जनलुप्ते तु चत्वारः परिकीर्तिताः ।
तदेव स्यादतिहृते आभावे षष्ठक स्मृतम् ॥
पञ्चविंशद्विकारे तु प्रस्तावे द्वयमेव हि ।
आहत्य नवका प्रोक्तासप्ततिस्याच्छतात्परम् ॥
उच्चामहि पुनारवजये प्रत्वौशनन्तथा ।
उच्चातेजातमण्डाद्या आइभावस्ते निदर्शनम् ॥
पुनानस्सोम देवो यौधाजये प्राकृते तथा ।
सौभराभीवर्तजयानां वृद्धन्तुरीयमक्षरम् ॥

पुनानस्सोमधारया सोशब्दश्च निदर्शनम् ।
यत्र स्तोम इकारान्तो गतिसंज्ञो गतोपि सः ॥
कथ्यते तत्र दृष्टान्तो होल प्रभृति हाल च ।
गतागतौ तु द्वौ सत्सु हाइहो इतीच निदर्शनम् ॥
द्विविधा गतिरिगतिरुगतिश्चेति मात्रालक्षणवचनात् ।
तर्जनीतस्समुत्क्षिप्त उद्घातः परिकीर्तितः ॥
तर्जन्याधः पतन्युच्चात्सन्निघात इतीरितः ।
तयोर्निदर्शनं प्रोक्तमामहीयवसामनि ॥
उद्घातस्येवरुणावरिवोविन्निघातकम् ।
पदगीतं विसर्गान्तन्तमाः प्रोक्तन्निदर्शनम् ॥
ओकारान्तं संधिगीतम्मदो इति निदर्शनम् ।
पार्थवाराहवासिष्ठप्रकापा शब्दरत्वरम् ॥
वृद्धमृवर्णमाभावघ्नन्तः कृष्णामपत्वचम् ।
एदोदाभ्यामन्तःसंस्थः यस्वरो लोपमाप्नुयात् ॥
प्रश्लेषः कथितस्सोत्र ह्वसेवोग्नये यथा ।
न लुप्यते स्वरो यत्र विशेषस्तत्र कीर्तितः ॥
निदर्शनद्वय प्रोक्तमेतदेव रथन्तरे ।
तत्संकृष्टं समुद्दिष्टं व्यञ्जनैर्यवयोर्युतिः ॥
भुज्याददे स्वायुधश्च निदर्शनमिति द्वयोः ।
असंयुतं विकृष्टं हि भूमियाचसुवायुधाः ॥
पूर्वांग तद्भवेत्पूर्वं पदे संयुक्तमक्षरम् ।
परांगं तद्विजानीयाद् दृश्यते यत्परे पदे ॥
पुनानस्सोमधारयापोवसावान्निदर्शनम् ।
पूर्वांगस्य परांगस्य बयाहोवांसि कीर्तितः ॥
अतिहृतं बर्हिषि ततुराणाश्च पिशंगकम् ।
वृद्धमन्तपदे तालव्यमा भवति दीधिमः ॥
पदस्य पुनावृत्तिर्विकल्पःपरिकीर्तितम् ।

ऊहे निधनकामे च मदश्शब्दो निदर्शनम् ॥
अथोहगीतिः प्रस्तावभक्तिष्षोडश तु स्मृताः ।
आइभावादिभावानां सामतन्त्रेपि विस्तृतम् ॥
वन्दे वररुचिन्नित्यमूहाब्धेः पारदृश्वनम् ।
पोतो विनिर्मितो येन फुल्लसूत्रशतैरलम् ॥
आदाय फुल्लं ह्यपत्रादसूत्राण्याआदिभावेषु करोति पोतम् ।
इदं फुल्लस्य सूत्रस्य बृहद् भाष्यं हि यत्कृतम् ॥
नानाभाष्याख्यया रामकृष्णदीक्षितसूरिभिः ।
सामतन्त्रस्य यद्भाष्यमयमेवैव चिन्तितम् ॥

— ० —

चतुर्दशावगृह्यस्य सूत्राण्यादिपदैरिदम् ।
लक्षणन्तु प्रवक्ष्येहमथावगृह्यतीति च ॥
हितवाक्ये त्रिंशदेव खण्डा आहुर्मनीषिणः ।
धर्मोपप्रकृतौ विद्धि सुचित्तो स्तोभ एव च ॥
उत्तरस्यामृचि प्रोक्तो वेदो धर्म इतीरितम् ।
अनुक्तं सर्वमेतेषु पौरुषेणैव या कृता ॥

— ०

अथ स्तोभानुसहारे चत्वारिंशच्च पाद्यकम् ।
आद्यन्तदर्शनस्तोभस्तत्रादौ तु प्रपठ्यते ॥

— ० —

मात्राणां लक्षणं प्रोक्तं खण्डास्त्रिभिरुदाहृतम् ।
फुल्लकारेण यत् प्रोक्तं तदुत्कृष्टं श्रुतौ विधिः ॥
आर्चिके लक्षणे प्रोक्तं श्लोकानान्तु त्रयोदश ।
उदात्तश्चानुदात्तश्च आदितक्रमशस्फुटम् ॥
फुल्लस्य लक्षणे श्लोकाश्चतुस्त्रिंशदुदीरिताः ।
अथ पञ्चविधाष्टौ तु लक्षणारंभ इष्यते ॥
पाणिन्युक्तौ तु शिक्षाया षष्टिश्लोकादाहृतम् ।
अथ शिक्षां प्रवक्ष्यामि सूत्रारंभणमुच्यते ॥

कर्तृत्वमपि शिक्षाणां नामलिंगाच्च दृश्यते ।
इदं शिक्षस्ययं भाष्यं पिङ्गलाचार्यचिन्तितम् ॥
प्रपाठकौ द्वौ शिक्षायां नारदस्य तु शैक्षकम् ।
खण्डाश्च षोडष प्रोक्ता अष्टावष्टौ प्रपाठयोः ॥
श्लोकेन पञ्चत्रिंशेन समद्विशतसंख्यकम् ।
अथातःस्वरशास्त्राणां यवकारं समं विदुः ॥
भट्टशोभाकरेणोक्तमिदं ग्रन्थस्य विवृतम् ।
गौतमी शिक्षया प्रोक्तौ पाठकद्वयमेव तु ॥
खण्डाश्च षोडश प्राहुर्मुनयस्सामचिन्तकाः ।
प्रपाठके तु प्रथमे खण्डास्तु वसुसंज्ञकाः ॥
द्वितीये नागसंख्यास्तु मुनीनाम्मतमीरितम् ।
त्रयस्त्रिंशद्व्यञ्जनानि अस्योदन्तु द्वितीयके ॥
खण्डास्तु लोमशिक्षायामष्टावाहुर्द्विजोत्तमाः ।
श्लोकानामष्टसप्तत्या पूर्णमाहुर्मुनीश्वराः ॥
लोमशिन्यां प्रवक्ष्यामीत्यादिश्लोकवाचकम् ।
रावणेन प्रणीतन्तु वेणामलक्षणं बुधाः ॥
त्रयः प्रपाठकाः खण्डा रावणा यत् प्रकीर्तिताः ।
प्रपाठके तु प्रथमे षोडशीतिरुदाहृताः ॥
द्वितीयेथ वनं प्रोक्तं तृतीये मुनिभिःस्मृतम् ।
अग्ने यो प्रथमे विद्वन् आमनवौ द्वितीयके ॥
रथन्तरं स्वासुदिगिदौदुदौ पेढज एवतु ।
इत्येते सप्तदश तु लक्षणानि विदुर्बुधाः ॥
अध्यायास्तु त्रयः प्रोक्ता गौतमप्रोक्तधर्मके ।
नवविंशतिखण्डास्तु प्रथमे नवकं स्मृतम् ॥
द्वितीये च तृतीये च दशखण्डास्समीरिताः ।
वेदो धर्मस्तु तत्रादि द्विजातीनां द्वितीयके ॥
चतुष्षष्टिस्तृतीये तु समाप्तं धर्मशासनम् ।
कृतामिताक्षितीचाख्यो हरदत्तेन विस्तृतम् ॥

— ०